आहूय सोमवर्माणं संपूज्याम्बरभूषणैः ।
उवाच प्राञ्जलिर्वाक्यं करिकालोऽथ मन्त्रिभिः ॥ १५

करिकाल :

शिवकैङ्कर्यकरणे नियुक्तश्शूलपाणिना ।
गोपुरारंभकरणे साहाय्यं त्वं कुरुष्व मे ॥ १६

यद्य(द)त्र शिल्पशास्त्रोक्तं तत्कुरुष्वाविचारितम् ।
यावदिच्छं धनंतेऽद्य प्रदास्यामि न संशयः ॥ १७

शिवकैङ्कर्यकरणे प्राणानपि जुहोम्यहम् ।
किं पुनर्धनधान्याद्यैर्दारैर्वसुधयापि च ॥ १८

इति श्रुत्वा राजवचो प्रहृष्टश्शिल्पिराट् तथा ।
विघ्नेशात् पश्चिमेभागे सोमवर्माथ कालिकाम् ॥ १९

स्वेष्टदेवीं प्रतिष्ठाप्य शिल्पिनां कुलदैवताम् ।
कृत्वाऽऽलयं तदा काल्या पूजयामास शिल्पिभिः ॥ २०

पञ्चामृतैर्गन्धपुष्पधूपदीपनिवेदनैः ।
प्रणम्य तां तदा कालीं सोमवर्मास्तुवत्तदा ॥ २१

सोमवर्मा :

कालि ! कालि ! नमस्तेऽस्तु शिल्पिनां वरदायके ।
क्षेत्रेऽस्मिन् वसतां पुंसां उपसर्गाणि संहर ॥ २२

शिल्पिनां वरदानित्यं भव त्वं सर्वकामदे ।
पूजोत्सवादिभिर्नित्यं त्वामादौ शिल्पिनस्तथा ॥ २३

बृहदीशात्पूर्वमेव कुर्वन्त्युत्सवमेव ते ।
तस्मै स्तुष्टा तदा काली वरदा प्राब्रवीद्वचः ॥ २४

काली :

राज्ञानेन समादिष्टं बृहदीशस्य गोपुरम् ।
तत्कर्तास्यविचारेण शिल्पिभिर्नात्र संशयः ॥ २५

अहमत्र निवत्स्यामि शिल्पिनां वरदा सदा ।
पूजिताऽत्रैव सर्वेषां इष्टदा भृगु भौमयोः ॥ २६

इत्युक्त्वाऽन्तर्दधे काली शिल्पिराट्प्रमुदितोऽभवम् ।
उत्तराभिमुखी काली तत्क्षेत्रवरदा नृणाम् ॥
शिल्पिभिः पूजिता नित्यं वसत्यद्यापि तत्स्थले ॥ २७

॥ इति श्रीभविष्योत्तरेमहापुराणेबृहदीश्वरमाहात्म्ये
त्रयोदशोऽध्यायः समाप्तः ॥

*

## ॥ अथ चतुर्दशोऽध्यायः ॥

सूत :

करिकालञ्च ...... घोणैः पूरयदंजसा ।
धनैश्चैव सुवर्णाद्यैरागिरेस्सतटावधि ॥ १

आपणान्कारयामास नवधान्य प्रपूरितान् ।
पानीयान्नादिशालाश्च स चकार पदे पदे ॥ २

दृषदाकर्षणे तुङ्गां चक्रं माहिषकान् वरान् ।
एवं कृत्वा तदाघोणां[घोर्णां]टंकेनाच्छिनदुत्कटाम् ॥ ३

पथि संपततिद्रव्यं मार्गे चारावदुर्नृपे [चारोऽवदन्नृपम्] ।
नृपोभ्युवाच तान् चारान् [तं चारं] स करोतु यथा मति ॥ ४

तद्राज्ञो वचनं श्रुत्वा हर्षितः शिल्पिराट् तथा ।
उत्तुङ्गं गोपुरं दिव्यं करिष्यत्ययमेव हि ॥ ५

इत्युक्त्वा निर्ययौ शिल्पैः शिल्पिराट् स गिरेस्तटम् ।
टंकैस्सञ्छेदयामास गिरेः शिखरमुत्तमम् ॥ ६

दृषद्भिः पूरयश्चक्रानकर्षच्छिल्पिनायकः ।
आहूय तं शिल्पवर्यं संपूज्यांबर भूषणैः ॥ ७

पूजितो नृपतिं प्राह प्राञ्जलिः किङ्करोम्यहम् ।

राजा :

शिवकैङ्कर्यकरणे नियुक्तश्शूलपाणिना ॥ ८

कुरुष्वगोपुरारम्भं सोमवर्मन् ! सुशिल्पिभिः ।
यदत्र शिल्पशास्त्रोक्तं तत्कुरुष्वाविचारितम् ॥ ९

यावदिच्छं धनं तेऽद्य दास्यन्ति मम मन्त्रिणः ।
अहं वै नर्मदां यास्ये लिङ्गानयनहेतवे ॥ १०

हरदत्तेन गुरुणा चतुष्षष्ठिवणिग्जनैः ।
आवेदयन्ति दैवज्ञाः श्वः प्रभातेऽरुणोदये ॥ ११

तमूचुर्मन्त्रिणस्सर्वे करिकालाग्रतः स्थिताः ।

मन्त्रिण :

त्वदाज्ञया नृपश्रेष्ट करिष्यामोऽत्र शिल्पिना ॥ १२

निद्रामधिगतस्वप्ने शिवोक्तं प्रातराह वै ।
वणिग्भिश्च चतुष्षष्ठिसंख्यैर्गच्छस्व तां नदीम् ॥ १३

तैर्लिङ्गं कर्षयन्मार्गे समागच्छेत्यगाच्छिवः ।
आहूयतान् वणिग्वर्यान् संपूज्यांबर भूषणैः ॥ १४

निर्यान्तु वै शिवाज्ञप्ता लिङ्गानयन हेतवे ।

वणिज :

नत्वा तुन्दिलविघ्नेशं धामनिर्विघ्न हेतवे ॥ १५

इत्युक्त्वा ते वणिग्वर्या नत्वा नत्वा गणाधिपम् ।
ऊचुस्संपूज्य नत्वाथ चतुष्षष्ठि वणिग्वराः ॥ १६

शिवेन राज्ञा चाज्ञप्ता लिङ्गानयन हेतवे ।
निर्विघ्नेन गणाधीश पंथास्सन्तुष्ट सदा हि नः ॥ १७

इत्थं वणिग्वचः श्रुत्वा दक्षिणास्यो गजाननः ।
पश्चिमाभिमुखो भूत्वा वणिग्वर्यानुवा च ह ॥ १८

गणाधिप :

गच्छध्वं विज्वराः सर्वे मत्सान्निध्यनिवासिनः ।
शुण्डयालिङ्गचक्रं तं कर्षयाम्यहमेव हि ॥ १९

नत्वा तुन्दिलविघ्नेशंमन्वागाद् गुरुणा च तैः ।
राजापि गुरुणा सार्धं प्रययौ नर्मदां तदा ॥ २०

स्नात्वोंकारकुण्डे तु बाणलिङ्गं करागतम् ।
द्वयं तत्रैव निक्षिप्य पूर्वं करगतं नृपः ॥ २१

तृतीयं रोधसिस्थाप्य पूजितं शुद्धितामगात् ।
तद्दृष्ट्वा महदाश्चर्यं राजा स्वगुणा सह ॥ २२

चक्रयाने समारोप्य मण्डपे पुष्पभूषिते ।
नानावाद्यादिघोषैश्च विप्राणां स्वस्तिवाचनैः ॥ २३

षण्मासात्स्वपुरं प्राप कावेर्या दक्षिणे तटे ।
शमीवनमगात्पुंसां वसतां सर्वपापहम् ॥ २४

तत्र तञ्जेश्वरस्याग्रे निधाय समपूजयत् ।
धूपदीपोपहाराद्यैः पञ्चामृत निषेचनैः ॥ २५

शिवद्विजकुलोत्भूतैः त्रिकालं स महीपतिः ।
वणिजः (वणिग्भिः) पूजयामास धनधान्याम्बरैर्नृपः ॥ २६

गुरुणा मन्त्रिभिः पत्न्या हृष्टस्तत्प्राविशत्पुरम् ।
लिङ्गं शिवालयेस्थाप्य यावद्गोपुर बन्धनम् ॥ २७

॥ इति श्रीभविष्योत्तरेमहापुराणेबृहदीश्वरलिङ्गानयनं नाम
चतुर्दशोऽध्यायः ॥

*

## ॥ अथ पञ्चदशोऽध्यायः ॥



सूत :

ततस्स सोमवर्माख्यः शिल्पिराट् कृतनिश्चयः ।
शिल्पिभिः खानयामास पाषाणनिचयं व्यधात् ॥ १

प्राकारं वृषभश्रेष्ठैः शाह्ययेवं गोपुरद्वयम् ।
चाकार शिल्पशास्त्रोक्तं विश्वकर्मेव भूगतः ॥ २

एवं द्वादशवर्षाणि व्यतीयुस्तस्य शिल्पिनः ।
शिल्पैरनेक साहस्रैः कुर्वतोऽस्य शिवालयम् ॥ ३

चोळानयन वेळायां गर्भिणी सोमवर्णः ।
प्रासूत तनयं तत्र सोऽभूत् द्वादशहायनः ॥ ४

शिल्पग्रन्थं समालोक्य पितुर्मार्गानुसार्यभूत् ।
पाषाणच्छेदिकान् टंकान् गृहीत्वा स्वकरेऽर्भकः ॥ ५

प्रणम्यमातरं प्राह क्वगतो मत्पिता वद ।
तं माता जातबुद्धिं सा दृष्ट्वा सूनुं सुशिल्पिनम् ॥ ६

उवाचालिङ्ग्य तं पुत्रं दत्त्वा दध्योदनं पथि ।

माता :

उत्तुङ्गं गोपुरं कर्तुं गतस्तञ्जापुरं पिता ॥ ७

चोळेन पूजितास्तत्र वसत्यद्यापि ते पिता ।
तत्र त्वं गच्छ वाञ्छातो धनमिच्छस्व पार्थिवात् ॥ ८

प्रणम्य मातरं पुत्रः प्रययौ दशभिर्दिनैः ।
शिल्पैः शिल्पकृतं कर्म दृष्ट्वान्तं मानकाष्ठतः ॥ ९

गणयामास तत्पीठं गोपुरोद्धार संस्थितम् ।
तत्रैवालोकयन् राज्ञः सचिवं बाल ऊचिवान् ॥ १०

बालशिल्पि :

एतत् . पीठप्रमाणेन यदि स्याद्गोपुरंकृतम् ।
महावातैर्वृष्टिभिश्च पतिष्यति मुहुर्मुहुः ॥ ११

शिल्पेन केनकारीदं मन्येनासौ विचक्षणः ।
इति बालोदितं श्रुत्वा राज्ञेऽमात्योऽवदद्रहः ॥ १२

राजा :

राजा तं बालमानीय कस्त्वं केन पथाऽऽगतः ।
किं प्रमाणेन वै भूयो(द्ध) बद्धं स्याद्गोपुरं . दृढम् ॥ १३

इत्यूचे बालशिल्पि तं सोप्युवाच महीपतिम् ।

बालशिल्पि :

पीठिकान्तरतो मानं कृतं स्यात् सुदृढं भवेत् ॥ १४

एवं संवदतोस्तत्र बालपार्थिवयोर्मुदा ।
शिल्पिनश्शंसिरे सर्वं वृत्तान्तं सोमवर्मणे ॥ १५

सोमवर्मापि तत् श्रुत्वा भक्ष्यभोज्यविषाप्लुतम् ।
कारयामास तद्राज्ये शीघ्रमानयतेति तम् ॥ १६

कोयं कस्मात्समायातः शिल्पानूचुर्मुहुर्मुहुः ।
राजद्वारि स्थिताः शिल्पाः निर्गतं बालशिल्पिनम् ॥ १७

समानिन्युस्तदाक्षिप्रं निकटं सोमवर्मणः ।
सोमवर्मापि तं दृष्ट्वा बालमुज्वल पौरुषम् ॥ १८

टंक हस्तं शिल्पगुणकाष्टवेत्रधरं सदा ।
अन्तः प्रच्छन्नकोपेन दह्यमानोऽवदत्तदा ॥ १९

**सोमवर्मा :**

को वा त्वं कुत आयातः भुङ्क्ष्व श्रान्तोऽसि नन्दन ।
इत्युक्तं तद्वचःश्रुत्वा प्राह बालः कृताञ्जलिः ॥ २०

**बालशिल्पि :**

नाति सम्यक्कृतं तात राज्ञः कोशो व्ययीकृतः ।
एवं कृतञ्चेदुत्तुङ्गं गोपुरं न स्थिरं भवेत् ॥ २१

तत् श्रुत्वा स पुनःप्राह कथं कार्यं मयेति वै ।
बालोऽसि वृद्धबुद्धिस्त्वं शिल्पशास्त्र कृतश्रमः ॥ २२

वृद्धोस्म्यंङ्गुळिमानं वै नाभिं जानामि तत्वतः ।
तमूचे पितरं पुत्रः त्वत्तो वेद्म्यहमेव हि ॥ २३

तथापि वक्ष्ये मत्याहं पीठमाभ्यन्तरं कुरु ।
संस्थितायाः पट्टिकायाः विंशत्यङ्गुळिमन्तरा ॥ २४

कृतञ्चेत् शाश्वतं भूयात्सफलोऽस्तु नृपश्रमः ।
तस्य साहाय्यकरणात् सुप्रसन्नो भवेच्छिवः ॥ २५

अस्माकमपि कैलासवासं दास्यति शंकरः ।
इत्युक्तं तद्वचःश्रुत्वा तत्तथैव करोम्यहम् ॥ २६

नियुंक्ष्व शिल्पिनः सर्वानद्यप्रभृति भो ! सुत ।
शिल्पीन्सर्वान् समाहूय चक्रे सुतवशानुगान् ॥ २७

उवाच गणितान्प्राह सोमवर्मा सुताग्रतः ।

सोमवर्मा :

प्रातर्मध्यान्हसायाह्ने भवच्छिल्पायदक्षया ॥ २८

समाधास्यान्यस्यावचो भवद्भिः परिपाल्यताम् ।
तथेति तस्य वचनं चक्रुस्सर्वेऽपि शिल्पिनः ॥ २९

नीलीसूत्रैस्तदाऽस्मानः सूत्रयामासतुस्तदा ।
सुधाकरा यन्त्रकरा खनकानियुतं तदा ॥ ३०

सोन्वसत्खु सिल्पवरान् स्वयंसूत्रेण मानयन् ।
हरीतकीगुडरसकतकक्रमुकैरसैः ॥ ३१

केशप्रमाणं पापाणसन्धिं स सुधया व्यधत् ।
नवनीतोपमयासुधया सन्धि .... वन्धिनाम् ॥ ३२

शिल्पिनां टंकशब्देन घनशब्दस्तिरोदधे ।
चकार गोपुरे शिल्पं पितुर्यालोमुदं वहन् ॥ ३३

राजापि श्रुतवृत्तान्तः ज्ञात्वा तौ पितरं सुतम् ।
पूजयित्वाम्बरैस्तोच भूषणैश्च मुदं व्यधात् ॥ ३४

सूत :

तत्रैकां जरती वृद्धाश्रमणी भस्मभूषणा ।
शिल्पीन् पर्यचरन्भक्त्या अन्नताबूलदानतः ॥ ३५

एवं द्वादशवर्षाणि शिल्पं तेषां प्रकुर्वताम् ।
सा प्रार्थयत्तदा वृद्धा शिलाखण्डं गृहे मम ॥ ३६

शिवकैङ्कर्यपुण्ये तु योजयध्वं यथा विधि ।
तेन मे प्रीतिरतुला जायते नात्र संशयः ॥ ३७

तथेति वृद्धावचनात् सुश्लक्ष्णमसितां शिलाम् ।
तन्मध्यगोपुरे क्षिप्त्वा शम्भोर्मौळौ समानतः ॥ ३८

एवं द्वादशवर्षान्ते प्रबबन्ध स गोपुरम् ।
विश्वकर्मांशसंभूतो सोमवर्मा सहात्मजः ॥ ३९

शिल्पैर्नियुत साहस्रैः सुधां सन्धौ विधाय च ।
राजा सन्तुष्टहृदयो ह्रतत्तेन संयुतः ॥ ४०

मन्त्रीनाज्ञापयामास वणिजः कर्षतामिति ।
चतुष्पष्टिर्गोहगतैः तल्लिङ्गानयनोद्यतैः ॥ ४१

महद्भिर्गेयवाद्यैश्च पुष्पवर्षैः पदे पदे ।
वेदघोषैर्महद्भिश्च वेश्यानृत्तनकैरपि ॥ ४२

तञ्जेश्वरालयाल्लिङ्गं बृहदीशाख्यमुत्तमम् ।
समानीयाथचक्रेण कर्षद्भिर्वणिजैस्तथा ॥ ४३

तदुत्तुङ्गे गर्भगेहे स्थाप्य लिङ्गं महत्तरम् ।
स्थापनात्प्राविशत्मूलं बृहदीशस्यशूलिनः ॥ ४४

ब्रह्मपीठं वेदिकाश्चाष्टबन्धविधानतः ।
बबन्ध शिल्पिराट् दिव्यं शुभलग्ने द्विजोदिते ॥ ४५

तदा भक्षयतस्तस्य ददौ ताम्बूलवीटिकाम् ।
तां वीटिकां समादाय स शिल्पीः स्वमुखेऽक्षिपत् ॥ ४६

कर्पूर गन्धिलांवीटिं राजानं वीक्ष्य पृष्ठगम् ।
उत्तस्थौ भयसंविग्नः क्षमस्वेत्याह तं नृपम् ॥ ४७

मच्छिल्पं दर्शयाम्यद्य अपराधं क्षमस्व मे ।
सुब्रह्मण्यालयं राजन् करिष्यामि विचित्रितम् ॥ ४८

तवापराध करणात् मच्छिल्पं दर्शयाम्यहम् ।
इत्थं तद्वचसाकृष्टः तथेत्याह महीपतिः ॥ ४९

---

These three stanzes are not found in the MS. But, seen in the copied volume of this MS. It is not known that where from the copiest got these stanzes.

पञ्चवर्णैव वर्णैश्च गोपुरं दिव्यमातनोत् ।
मण्टपानि च दिव्यानि शिवस्याग्रे चकार ह ॥

देव्याश्च बृहदम्बायास्सोमास्कन्द नटेशितुः ।
चण्डीशस्य गणेशस्य आलयानि व्यधात्क्रमात् ॥

कस्मिंश्चिद्दिवसे राजा करिकालोदिदृक्षया ।
शिवालयं समागत्य तस्थावेकान्त एव हि ॥
बालशिल्पैः पृष्ठभागे शिल्पे व्याग्रस्य तस्य वै ॥

बालशिल्पिस्तारकारैश्चकार भवनं शुभम् ।
देवसेनालवल्यादियुक्तं केकिस्थितं गुहम् ॥ ५०

अखण्डैकशिलायान्तु चकाराथ स शिल्पिजः ।
सोमवर्मा नन्दिकेशमखण्डैकशिलामयम् ॥ ५१

कृत्वा पश्येति राजानं चमत्कारं ममाधुना ।
अस्मिन् वृषभपाश्चात्यभागेन्नीरेण भेककः ॥ ५२

तिष्ठतीति तदा टंकं गृहीत्वा समताडयत् ।
तच्चन्दनेनोपलिप्ते सार्द्रे चैवाश्र तत्स्थले ॥ ५३

तच्चीरं भेककस्तत्र नटेशात् पश्चिमेऽपतत् ।
भेकतीर्थं च तन्नाम्ना विख्यातं तच्छिवालये ॥ ५४

तदा प्रभृति वृद्धिश्च नन्दिकेशस्य कुण्ठिता ।
एवं कृत्वाऽलयं तत्र दक्षिणे नन्दिकेश्वरम् ॥ ५५

स शिल्पी कारयामास अघोराग्रे प्रतिष्ठितम् ।
'वाञ्छितार्थप्रदंनित्यं पूजनात्सर्वकामदम् ॥ ५६

वर्षावर्षप्रदं साक्षादघोरं ज्वरनाशकम् ।
पञ्चविंशतिमूर्तिश्च कृत्वा स्थाप्य शिवालये ॥ ५७

सोमास्कन्दं तथोत्तुङ्गं चक्रे लिङ्गानुरूपतः ।
तदुत्तरे कूपमेकं नाम्ना पापामहं शुभम् ॥ ५८

शिखरे कारयामास नन्दिकेशाष्टमान्मुदा ।
प्राकारराजद्वृषभं नानालङ्कार भासुरम् ॥ ५९

कृत्वा स शिल्पिराड् राज्ञेऽदर्शयत् स्वकृतं तदा ।
दृष्ट्वा तदद्भुतं तस्य शिल्पकौशलमुत्तमम् ॥ ६०

साक्षाद् भूगतकैलासममन्यत महीपतिः ।
कनकान्दूलिकान् दत्वा कनकस्नानमाचरत् ॥ ६१

गजस्कन्धेधिरोप्यैनं स पुनं भ्रामयत्पुरम् ।
वाद्यघोषेण महता वस्त्रभूषण भूषितम् ॥ ६२

कटकैर्हारकेयूरैर्वस्त्रैश्शिल्पानपूजयत् ।
भोजयामास तान्सर्वान् शिल्पिनः षड्रसोत्तरैः ॥ ६३

नाम्ना चोळपुरं कृत्वा तस्मै शिल्पाय दत्तवान् ।
कावेर्या उत्तरेतीरे राजदत्त धनेन सः ॥ ६४

कैलासनाथलिङ्गस्य चालयं प्रबबन्ध सः ।
हरदत्तं समानीय स्वगुरुं राजसत्तमः ॥ ६५

शिवागमज्ञानाहूय देशे देशे शिवार्चकान् ।
कुंभाभिषेक संभारानानीय नृपतिस्तदा ॥ ६६

विप्रांश्च शतसाहस्रान् कण्डमण्डपपूर्वकम् ।
श्रीमत्पञ्चनदस्थानादागतैश्च शिवार्चकैः ॥ ६७

कारयामास नृपतिः बृहदीशस्य शूलिनः ।
मकुटागमवाक्येन चक्रे कुम्भाभिषेचनम् ॥
महाभिषेक विधिना पूजयामास शङ्करम् ॥ ६८

॥ इति श्रीभविष्योत्तरेमहापुराणेबृहदीश्वरमाहात्म्ये
पञ्चदशोऽध्यायः ॥

*

## ॥ अथ षोडशोऽध्यायः ॥

सूत :

कुंभाभिषेकं देवस्य बृहदीशस्यकारयत् ।
शुभे मुहूर्तेस्थिरके देव्यास्कन्द ' गणेशितोः ॥ १

सोमास्कन्द नगेशस्य वष चण्डीश्वरस्य च ।
सुवर्णरूप्यकलशैः शतमेकोनविंशति ॥ २

सहस्रशंखकूर्चोदैर्नवधान्योदकैः शिवम् ।
पञ्चपल्लव संयुक्त नदीनदजलैः शुभैः ॥ ३

सहस्रं ताम्रकलशैः नवरत्नोदकैः शिवम् ।
ब्रह्मकूर्चैः शतमितैः पञ्चगव्याभिषेचनैः ॥ ४

गोक्षीरशतसाहस्रैः दध्नः साज्यमधोः शतम् ।
शर्करागिरयः पञ्च नारिकेलं द्विलक्षकम् ॥ ५

कदली पञ्चलक्षञ्च पनसाम्रद्विलक्षकम् ।
दशलक्षैश्चलिकुचैः सहस्रं चेक्षुजं घटम् ॥ ६

गन्धांबु घट साहस्रैः शुद्धोदैः पञ्चलक्षकैः ।
सेचयत् रुद्रसूक्तैश्च चतुर्वेदोद्भवैः द्विजैः ॥ ७

रक्षांप्रतिसरं होमैः हावयत् स शिवार्चकैः ।
वस्त्राभरणसौवर्ण गोळुकञ्च त्रिपुण्ड्रकम् ॥ ८

फणीफणाशतोत्तुङ्ग लिङ्गमौलिं व्यधात् नृपः ।
देव्यास्कन्द गणेशस्य सोमास्कन्द नटेशयोः ॥ ९

वस्त्राभरणभूषाभिराभूष्योद्दीप्य चालयम् ।
घृतदीपैर्लक्षसंख्यैः उद्दीप्योद्धूप्य शङ्करम् ॥ १०

भक्ष्य भोज्यान्नगिरिभिः ताम्बूलादि फलादिभिः ।
निवेद्यनीराज्यशिवं सगणं बृहदीश्वरम् ॥ ११

नानावाद्य प्रभेदैश्च वेश्यानृत्तनदर्शनैः ।
वेणुवीणामृदंगाब्ज दुंदुभीकाहळारवैः ॥ १२

छत्रैश्च चामरैर्दिव्यैः पताका व्यजनादिभिः ।
रम्योत्तुंगादर्शकैश्च षोडशै रूपचारकैः ॥ १३

महाभिषेकविधिना पूजयामास शंकरम् ।
कोटिब्राह्मणभोज्यं च षड्सैस्समकारयत् ॥ १४

वासः स्रग्दक्षिणागर्म्य सोद(क)पात्रं स चोळराट् ।
शिवार्चकान् जापकांश्च तथैव परिचारकान् ॥ १५

वस्त्रैश्च भूषणैर्गन्धैः गोभूधान्यधनार्पणैः ।
पूजयामास नृपतिः शंभोः कुंभाभिषेचने ॥ १६

दक्षिणाभिश्च तांबूलैः विप्रानन्या न तोषयत् ।
स राजा बृहदीशस्य सपर्यां माण्डलीं व्यधात् ॥ १७

लक्षबिल्वार्चनं चक्रे त्रिकालं बृहदीशतुः ।
सितरक्तैश्चकमलैः नवनीलोत्पलैः सुमैः ॥ १८

पूजय द्बृहदीशानं करिकालः स चोळराठ् ।
कृत्वा ताम्रमयं पट्टं पूजनार्थं बृहदीशितुः ॥ १९

दश ग्रामान् ददौभूपः शूलमङ्गळ पूर्वगान् ।
नटनृत्तकवेश्याश्च संस्थाप्य परिचारकाः ॥ २०

पञ्चामृताभिषेकार्थं गवां प्रादात् सहस्रकम् ।
नित्यमास ऋतष्वेवं प्रदोषे सोमपर्वणि ॥
पूजयामास नृपतिः द्विगुणं बृहदीश्वरम् ॥ २१

॥ इति श्री भविष्योत्तरेमहापुराणे बृहदीश्वरकुंभाभिषेको नाम षोडशोऽध्यायः ॥

—•—

## ॥ अथ सप्तदशोऽध्यायः ॥

सूत :

चैत्रोत्सवं तदा चक्रे एकादश्यां रथोत्सवम् ।
द्वादश्यामुत्तरे तीर्थं शिवमानीय दत्तवान् ॥ १

ध्वजारोपणमारभ्य चक्रेष्टादशवासरम् ।
विघ्नेश्वरस्यस्कन्दस्य दिनानि त्रीणि चैव हि ॥ २

कल्याणसुन्दरेशस्य बाह्यवीथी प्रदक्षिणम ।
वृषवाहेन वै राजा महोत्सवमकारयत् ॥ ३

तथाष्टध्वजपूर्वं हि दिक्षु दिक्षु शिवालये ।
कारयामास नृपतिः भक्तिभावेन सत्तमः ॥ ४

गजवाहनभूतादीन् वाहनान्यथ कारयत् ।
उत्तुङ्गं च रथंकृत्वा देव्याश्चैव नृपोत्तमः ॥ ५

अष्टचक्रं पताकाढ्यं घंटाशोभितदिक्तटम् ।
नगरे भ्रामयामास बृहदीश्वरमेव हि ॥ ६

बृहन्नायिकयायुक्तं पश्चादन्यरथेस्थितम् ।
द्वादश्यां शिवगङ्गायां ददौतीर्थं महेश्वरः ॥ ७

सस्नुस्सर्वे जनास्तत्र राजा च हरदत्तकः ।
सर्वाङ्गकुष्ठनिर्मुक्तः राजा सोम इवाबभौ ॥ ८

पत्न्यासह तदा राजा स्नात्वादानानि वै ददौ ।
धनं धान्यं गवांवृन्दं ब्राह्मणेभ्योथ भक्तितः ॥ ९

तस्मै सन्दर्शयामास तत्र गंगा शिवाज्ञया ।
विश्वनाथाभिधंलिङ्गं गृहीत्वा स्वजलात्तदा ॥ १०

विद्युल्लतेवोल्लसन्ती सर्वाभरणभूषिता ।
राजानमाह सा गंगा जनानां शृण्वतां तदा ॥ ११

गंगा :

बृहदीशोत्तरे तीर्थे शिवगंगास्म्यहं नृप ।
एकांशेन वसाम्यत्र जनानां पापहारिणी ॥ १२

स्नानपानेन सर्वेषां तृप्तिदास्म्यमृतोपमा ।
ये स्नान्ति शिवगंगायां पश्यन्ति बृहदीश्वरम् ॥ १३

ते सर्वे पापनिर्मुक्ताः वसन्ति रजताचले ।
ग्रहणे सोमसूर्योस्थे प्रदोषे सोमवारके ॥ १४

पौर्णमास्याममावास्यां तथा पुण्येषु पर्वसु ।
स्नात्वात्र शिवगङ्गायां मयिस्नानफलं भवेत् ॥ १५

ये पश्यन्ति महादेवं बृहदीशं कपर्दिनम् ।
त एव विश्वनाथस्य दर्शनाद्यत्फलं भवेत् ॥ १६

सरस्याग्नेयदिक्कोणे स्थापयामीदमुत्तमम् ।
विश्वनाथाभिधंलिङ्गं गङ्गायां संस्थितं पुरा ॥ १७

शिवगङ्गाह्वये तीर्थे स्थाप्य गङ्गा तिरोदधे ।
स धाम शिवगङ्गायां तल्लिङ्गं पूजयन्नृपः ॥ १८

अद्यापि दृश्यतेलिङ्गं शिवगङ्गा सरस्यहो ।
तं दृष्ट्वा विस्मयं राजा स्वाङ्गकुष्टाद्विमोचितम् ॥ १९

प्रणम्य दण्डवद्भूमौ तुष्टाव बृहदीश्वरम् ।

करिकाल :

"नमो देवादि(धि)देवाय चन्द्रचूडाय शम्भवे ॥ २०

बृहदम्बापते तुभ्यं बृहदीशाय ते नमः ।
विश्वनाथाय नित्याय व्योमकेशाय शूलिने ॥ २१

वामदेवाय भीमाय बृहदीशाय ते नमः ।
महादेवाय शुद्धाय शंकराय कपर्दिने ॥ २२

प्रणताज्ञाननाशाय बृहदीशाय ते नमः ।
गङ्गाधराय विश्वाय सर्पहाराय ते नमः ॥ २३

पशूनां पतये तुभ्यं बृहदीशाय ते नमः ।
भस्मरुद्राक्षमालाय कुमार जनकाय च ॥ २४

गणेशनन्दिसेव्याय बृहदीशाय ते नमः ।
वृषध्वजाय सर्वायः ब्रह्ममुण्डधराय च ॥ २५

कपालमालिने तुभ्यं बृहदीशाय ते नमः ।
क्ष्मारथाय नमःतुभ्यं नमस्ते मेरुधन्वने ॥ २६

विष्णुबाणाय देवाय बृहदीशाय ते नमः ।
त्रियंबकाय भर्गाय नीलकंठाय हेतवे ॥ २७

सर्गरक्षाकरान्ताय बृहदीशाय ते नमः ।
त्वदर्चकानां भक्तानां सद्यः क्षिप्र प्रसादिने ॥ २८

श्रीरुद्रप्रतिपाद्याय बृहदीशाय ते नमः " ।
एवं स्तुवन् तदा राजा बृहदीशाष्टकेन वै ॥ २९

प्रणम्यदण्डवद्भूमौ देवदेव्याश्चमध्यतः ।
शिवार्चकांश्च स्वगुरुं हरदत्तमपूजयत् ॥ ३०

वस्त्रैराभरणैर्दिव्यैः तथान्यांश्च शिवार्चकान् ।
आदिशैवकुलोद्भूतान् श्रीमत्पञ्चनदागतान् ॥ ३१

धनधान्यांबरैर्गोभिः गृहैश्चद्विजसत्तमान् ।
स्थापयामास पूजार्थं बृहदीशस्यभूपतिः ॥ ३२

वणिजः पूजयामास दत्त्वा तेषांगृहं वसु ।
बृहदीशस्य वै भक्ताः तिष्ठन्त्वाचन्द्रतारकम् ॥ ३३

ततः प्रदक्षिणं कृत्वा स्वालयं प्रययौ नृपः ।
प्रियया हर्षितोराजा निशिशिश्ये स्वहर्मिके ॥ ३४

तत्स्वप्ने प्रावदच्छंभुः बृहदीशो महेश्वरः ।
बृहन्नायिकयायुक्तः करिकालमुवाच तम् ॥ ३५

त्वन्निवेदित भोज्येन जरतीदत्तछायया ।
निवसामि महाराज मान्योऽसित्वं नसंशयः ॥ ३६

इत्युक्त्वान्तर्हितो देवः प्रातः संस्मृत्यभूमिपः ।
आहूय हरदत्तं तं स्वप्नोदन्तं जगादवै ॥ ३७

विचार्य स चिरं सोऽपि शिल्पान्सर्वानथानयत् ।
उवाच सोमवर्माणं किं त्वयाद्य कृतं वद ॥ ३८

राजा :

राजद्रव्येण वाऽकारि अन्यद्रव्येणवालयः ।
विचार्य त्वं वदाद्याशु शिल्पानाहूय वै पृथक् ॥ ३९

इति राज्ञो गुरुवचः श्रुत्वासर्वेभयान्विताः ।
ऊचुस्ते च पृथग्गत्वा जगदुस्सोमवर्मणे ॥ ४०

शिल्पिनः

जरत्या पोषिताःकेचिच्छिल्पान्नप्रदानतः ।
तया दत्तोस्ति पाषाणः शिखरेस्थापितोस्ति नः ॥ ४१

तन्निस्सारण हेतुश्च न भविष्यति सर्वथा ।
इत्युक्तं शिल्पिवचनं प्रोचे राज्ञेथ शिल्पिराट् ॥ ४२

सोमवर्मा :

अपराधं महान्तं नः क्षमस्वावनिपोत्तम ।
जरतीदत्तपाषाणः स्थापितो शिखरेत्र्वै ॥ ४३

प्रसादयन्महादेवं विचार्य गुरुणामुना ।
प्रसन्नस्ते महादेवः तत्रोपायं वदिष्यति ॥ ४४

इत्युक्तं शिल्पवचनं निशम्य नृप पुंगवः ।
हरदत्तेन संमन्त्र्य प्राणत्यागे मनो दधे ॥ ४५

दिनत्रयं निराहारः पत्न्या साकं नृपोऽवसत् ।
नन्दिनो बृहदीशस्य मध्येनिद्राति भूमिपः ॥ ४६

स्वभक्तं करिकालं तं प्राणत्यागाय निश्चितम् ।
स्वप्नेदिनत्रयादूर्ध्वं प्रोवाच बृहदीश्वरः ॥ ४७

ईश्वरः

मा शुचःगच्छराजेन्द्र शिवकैङ्कर्यं कृद्भवान् ।
जरतीं पूजयन्नर्थैः यावदिच्छं नृपोत्तम ॥ ४८

तया संतुष्टयादत्तो धर्मस्ते संभविष्यति ।
यावन्त्यो वर्षताधाराः यावन्त्यो दिवितारकाः ॥ ४९

पूर्वापरैः स्ववंशैश्च वस त्वं मम सन्निधौ ।
मत्सारूप्यमवाप्याशु नन्दिकेशसमोभवान् ॥ ५०

विघ्नेशगुहतुल्योऽसि देव्याःपुत्रो न संशयः ।
इत्युक्तो बृहदीशेन प्रातरुत्थाय भक्तिमान् ॥ ५१

उवाच हरदत्ताय स्वप्नवृत्तं नृपोत्तमः ।
आनीय जरतीं वृध्दां कनकैरभिषेचयत् ॥ ५२

वृद्धस्तद्धारया धर्मं गृहीत्वा तां नृपोऽब्रवीत् ।

नृपः

लक्षटंकं सुवर्णस्य गृहीत्वा हर्षिता भव ॥ ५३

तेन मे तुष्टिरतुला जायते नात्रसंशयः ।
नृपस्य वचनं श्रुत्वा जरतीप्राह तं तदा ॥ ५४

जरती :

अद्यश्वो वा मरिष्यामि किं धनेन नृपाधमे ।
मन्नाम्नाकारय क्षिप्रं एभिस्त्वं शिल्पिपुङ्गवैः ॥ ५५

कुंभघोणाच्च नैरृत्यां श्रीमदैरावतेश्वरम् ।
कारयामाशु मम द्रव्यैः तेन मे तुष्टिरुत्तमा ॥ ५६

भविष्यति न सन्देहः तां तथेत्यवदन्नृपः ।
शिल्पानाहूय तत्रत्यान् शिवधामान्यकारयत् ॥
सापि तुष्टा ययौ राजा कालात्कैलासमेव हि ॥ ५७

सूतः

एतद्धि करिकालस्य चरितं पापनाशनम् ।
नवतिस्त्रोऽपि वर्षाणि कृत्वा राज्यं नृपोत्तमः ॥ ५८

भीमचोलं पदे स्थाप्य पत्न्या कैलासमभ्यगात् ।
शिवस्य गणपो जातः शिवसारूप्यभागभूत् ॥ ५९

यावन्नदीनदाश्चैव समुद्रा गिरयस्तथा ।
तावत्तस्याभवत्कीर्तिः बृहदीशप्रसादतः ॥ ६०

तस्यानुवर्णनाश्लोकाः तत्प्राकारे विलेखिताः ।
करिकालो महान् चोळः शिवभक्तशिखामणिः ॥ ६१

तच्चरितं नरः श्रुत्वा श्रावयेद्वापि भक्तितः ।
शिवस्य गणपोभूत्वा विहरेद्रचताचले ॥ ६२

आख्यानं बृहदीशस्य पुण्यं पापनिवर्तकम् ।
श्रवणात्तस्य विप्रेन्द्राः बृहदीशः प्रसीदति ॥ ६३

॥ इति श्री भविष्योत्तरेमहापुराणेबृहदीश्वरमाहात्म्ये करिकालस्य शिवसारूप्यभाजनंनाम सप्तदशोऽध्यायः ॥

*

## ॥ अथ अष्टादशोऽध्यायः ॥

सूतः

करिकाले कालकालपदं प्राप्ते तदात्मजम् ।
भीमचोलं तस्यपदे स्थाप्य चक्रुर्नृपं तदा ॥ १

अमात्याः पौरवर्गाश्च तद्भार्या केरळेशितुः ।
कन्या कमलपत्राक्षी मन्मथस्य रतेरिव ॥ २

आसीत्सर्वगुणोपेता भीमचोळस्य गेहिनी ।
प्रतापानतसामन्तो भीमो भीमपराक्रमः ॥
भीमपादार्चनव्यग्रो भीमतुल्यबलोऽभवत् ॥ ३

विद्युल्लताज्ञया तत्र शशास पृथिवीतलम् ।
न राष्ट्रे दस्यवस्तस्य न च दुष्टमृगोऽभवत् ॥ ४

पृथिवी सर्वसस्याढ्या काले वर्षति वासवः ।
ब्राह्मणावसथ ग्रामा निष्करास्तेन वैकृताः ॥ ५

फलवृक्षाः पथिकृताः प्रपास्तेनकृता बहु ।
अन्नसत्राणि भूरीणि पान्थेभ्योमृष्टमोदनम् ॥ ६

श्रमणाश्रमचर्याणां स्वस्त्रीबाला तु रावनम् ।
डोलाश्च बन्धितास्तेन व्यजनादर्शकंकृताः ॥ ७

तैलाभ्यङ्गं पादमर्दं कषायौषधदापनम् ।
दीयतां दीयतामन्नं भुज्यतां भुज्यतामिति ॥ ८

इत्याक्रोशन्ति गणका ग्रामे ग्रामे पुरे पथि ।
शकटारोपितैरन्नैर्दीपिकापाणयोनिशि ॥ ९

न स्वप्तव्यं केनचित्वै चातुर्वर्ण्यनरैः क्वचित् ।
ईदृशीनो नृपस्याज्ञा भोजनीया नरानिशि ॥ १०

यस्य वर्णस्य यो धर्मः सर्वैश्चक्रियतामिति ।
लापयध्वं फालतले भूतिरुद्राक्षधारणम् ॥ ११

कुरुध्वं पूज्यतां शंभुः भीमस्याज्ञेयमीदृशी ।
नोचेत्वो भीमचोळस्य सद्यो दण्डः पतिष्यति ॥ १२

एवं धर्मपरोराजा भीमचोळः शशास गाम् ।
तदाऽरुणाचलेशस्य गोपुरंमण्डपानि च ॥ १३

कावेर्या उत्तरे तीरे चक्रे भीमेश्वरालयम् ।
तदा द्रोणीपुरेशस्य चतुर्दिक्ष्वपि गोपुरम् ॥ १४

शिवालयेषु दीपार्थं चक्रेमाधूककं वनम् ।
कार्तिके हरविष्णूनां सन्निधौ दीपदो नृपः ॥ १५

नारिकेळेक्षुकदली सर्वपुष्पवनान्यपि ।
कारयामास भीमोऽसौ चोळे सर्वशिवालये ॥ १६

तीर्थं पंकान्युज्जहार सोपानाळीं बबन्ध वै ।
महापूजोत्सवादीनि हरविष्णोश्चकार सः ॥ १७

जागरूकः सदाराजा शिवकैंकर्यतत्परः ।
न स्मारयन्पूर्वचोळान् राज्यं चक्रे स्वधर्मतः ॥ १८

विद्युल्लताच तत्पत्नी भर्तृच्छायानुपागता ।
शंकरनारायणे भक्ता स्वपितुर्वंश संस्थिते ॥ १९

तद्दर्शनार्थं भर्तारं प्रार्थयन्तीस्थितारहः ।
स्वप्ने तामाहदेवेशो स्थास्येहं लिंगरूपधृक् ॥ २०

उत्तरे बृहदीशस्यकोंकणेशस्य दक्षिणे ।
तत्र मां पश्यनियमात् तेन मद्दर्शने फलम् ॥ २१

यद्भूयात्तत्फलं लब्ध्वा मामेवान्ते प्रयास्यसि ।
तवोदरे भवेद्भूयो नाम्नाराजेन्द्र चोळकः ॥ २२

इत्थं स्वप्ने शिववचः श्रुत्वापत्नी शुचिव्रता ।
प्रातर्दृष्ट्वा तत्रलिङ्गं राज्ञीराजा च हर्षितौ ॥ २३

शिवालयं व्यधात्तत्र दिव्यगर्भगृहोत्तरम् ।
संपूज्य राज्ञी तुष्टाव महादेवं नृपांगना ॥ २४

विद्युल्लता :

"देव देव महादेव करुणावरुणालय ।
प्रसीद भगवन् शंभो कृपांकुरु सदामयि ॥ २५

अस्मिन्नेव सदा स्थाने वसन् कामप्रदो भव ।
अपुत्राणां पुत्रदश्च एतल्लिङ्गार्चनात्प्रभो ॥
तस्यास्तद्वचसा तुष्टो महादेवोऽभ्युवाचताम्" ॥ २६

शंकरनारायणः

मत् पार्श्वे संस्थिते कूपे गुप्ता गंगाऽघनाशनी ।
तस्मिन् ये स्नान्ति वैशाख्यां तेषां वंशो न नश्यति ॥ २७

तस्मात् स्नात्वा त्वमप्यत्र मां राज्ञी परिपूजय ।
कार्तिके सोमवारेषु षोडशैरुपचारकैः ॥ २८

राजराजेन्द्रचोळाख्यं पुत्रं प्राप्स्यसि भूपतिम् ।
शिवाज्ञया व्रतं चक्रे स्नात्वा कूपे नृपांगना ॥ २९

पुत्रं लेभे नृपाद्राज्ञी राजराजेन्द्रनामकम् ।
सर्वलक्षण संपन्नमनंगंमूर्तित्रस्थितम् ॥ ३०

सर्वशास्त्रार्थकुशलं दृष्ट्वा संप्राप्त यौवनम् ।
कुलशेखरपाण्डयस्य कन्यामुद्वाहयत्पिता ॥ ३१

नाम्ना कमलिनी नाम रतेर्मूर्तिमिवापराम् ।
मातापित्रोः सुशुश्रूषां कुर्वन् रेमे तया सह ॥ ३२

सप्तसप्तति वर्षाणि संशास्य पृथिवीमिमाम् ।
कालेन शिवपादाब्जं याते पितरिमातरि ॥
स राज्यं निहताराति: चक्रे राजेन्द्रचोळराट् ॥ ३२

॥ इति श्री भविष्योत्तरेमहापुराणेभीमचोळचरिते

अष्टादशोऽध्यायः ॥

*

## ॥ अथ एकोनविंशोऽध्यायः ॥



सूतः

भीमचोळमहेशस्य पदं प्राप्ते तदात्मजः ।
अमात्यैः पौरवर्गैश्च संमन्त्र्य सकलान्नृपान् ॥ १

निर्जित्यान्यान् महीपृष्टे शिवदत्तबलेन सः ।
करदास्तस्य भूपालाश्चेरकेरळ पाण्ड्यपाः ॥ २

अभवंस्तद्धनैरेव शिवधामान्यकारयत् ।
मुल्लद्वारं महाक्षेत्रं श्रीमत्पुष्पवनेश्वरम् ॥ ३

इक्षुमूलेश्वरस्थानं दक्षिणामलकेश्वरम् ।
मुनिशाकनिवेदस्य ब्रह्मरन्ध्रेश्वरस्य च ॥ ४

ऋषिकानन नाथस्य सुवर्णस्य वनस्य वै ।
आलयानि च तीर्थानि उद्धृतानि नृपेण हि ॥ ५

संस्थाप्याऽशीतिलिंगानां सोत्सवानि विशेषतः ।
अग्रहाराणि भूरीणि क्षेत्रे क्षेत्रे कृतानि हि ॥ ६

विष्णोर्धामानि दिव्यानि उद्धृतानि सुभूरिशः ।
यत्र कुत्र स्थितान्यानि तारकारेर्विशेषतः ॥ ७

धामानि गिरिसंस्थानि हरदत्तोक्त मार्गतः ।
विनायकालयादीनि वापितटगतानि च ॥ ८

कुल्याक्षेत्राणि भूरीणि दुर्गाक्षेत्राणियानि च ।
शास्तुः क्षेत्राणि सर्वाणि विचार्योद्धृत्य भूपतिः ॥ ९

प्रतापरुद्रं फालाक्षं दृष्ट्वान्तं शासनातिगम् ।
मत्प्रभोः सदृशाक्षिस्यात् कथं वै मानुषोऽप्ययम् ॥ १०

शिवभक्ति बलेनैव तं च चित्रपटस्थितम् ।
तत्फलाक्षि हरद्राजा अक्षिहीनोऽभवच्च सः ॥ ११

प्रतापरुद्रो नष्टाक्षिः करं चोळाय चाहरत् ।
तद्दत्तंच धनं प्राप्य शिवधामान्यथाऽतनोत् ॥ १२

मणिमूर्तिमर्ति चैव चक्रे राजा नदीद्वयम् ।
एवं प्रतापरुद्रं तं जित्वा राजेन्द्रचोळराट् ॥ १३

तत्पत्नी जनयामास तनयं तेजसायुतम् ।
तं दृष्ट्वाराजराजेन्द्रचोळो मार्ताण्ड भासुरम् ॥ १४

संपूहृष्टस्तदा चक्रे वीरमार्ताण्ड नामकम् ।
तं पदेस्थाप्य तनयं बालं मन्त्रिवर्यैर्युतम् ॥ १५

नीतिज्ञैः धर्मबोधज्ञैः मन्त्रज्ञैर्गुरुभिर्वृतम् ।
एवं स कृत्वाचोळेन्द्र शिवकैंकर्य पुण्यतः ॥
अष्टसप्तति वर्षान्ते पत्न्या कैलास माप्तवान् ॥ १६

॥ इति भविष्योत्तरेमहापुराणे राजेन्द्रचोळ चरितकथनं नाम एकोनविंशोऽध्यायः ॥

*

## ॥ अथ विंशोऽध्यायः ॥

सूतः

स सुतो वीरमार्ताण्डः ततोऽभूद्वसुधाधिपः ।
चेरकन्याऽभवत्तस्य भार्या माणिक्कवल्लिका ॥ १

तयान्वशासद्वसुधां इन्द्रवत्सोऽमरावतीम् ।
पितामहानां चोळानां आचारं पर्यपालयन् ॥ २

भस्मरुद्राक्षमालाढ्यान् पौरांश्चक्रे शिवार्चकान् ।
विप्राग्रहारशोभाख्यं मठैस्तीर्थैर्विराजितम् ॥ ३

वेदघोषैः शास्त्रघोषैः वर्णिनां पाठशालिकाः ।
पानीयान्नावृताः शालाः पान्थ विश्रान्तिमण्टपाः ॥ ४

कावेर्यास्तीरयोश्चोळः निचोळमिव भूतले ।
दीक्षितैर्यत्र वै यज्ञैः समाहूतश्शतक्रतुः ॥ ५

हविषां भक्षणाद्देवाः तुन्दिलाश्चाभवन् दिवि ।
यत्राग्निहोत्रधूमो वै स्वर्गारोहण पद्धतिः ॥ ६

वेदान्तपाठनिरताः पतयः पूजितावसन् ।
प्राकार गोपुरादीनि मण्टपानि व्यधान्नृपः ॥ ७

स्वायंभुवानां देवानां आर्षाणां षष्टिसंख्यया ।
जीर्णोद्धारं नृपश्चक्रे शिल्पिभिर्धनदानतः ॥ ८

दक्षिणोत्तरकावेर्यां मध्यस्थानं जटायुषः ।
घृतस्थानं द्रुतिस्थानं खण्डीशस्यालयं व्यधात् ॥ ९

सप्तस्थान शिवागारा न्यातनोत् वैष्णवान्यपि ।
कुम्भघोणेशार्ङ्गपाणेः चक्रपाणेश्च वै हरेः ॥ १०

सारक्षेत्रे तथान्यानि शिवविष्ण्वोर्व्यधात् क्षयम् ।
सोमेश नागेश्वरयोः विश्वनाथाविमुक्तकम् ॥ ११

गौतमेशालयं चोळः माघतीर्थतटे व्यधात् ।
शशासैवं हताराति: पुरारातिपदार्चकः ॥ १२

स कदाचित्सभामध्ये वृद्धं राजा पुरोहितम् ।
उवाच देवशर्माणं आख्यानं कोंकणेशितुः ॥ १३

राजा :

आख्यानं कोंकणेशस्य ब्रूहि मे मुनिपुंगव ।
कस्मैप्रसादकरणे प्रादुर्भूतो महेश्वरः ॥
तत् श्रुत्वा चोळवचनं उवाच प्राञ्जलिर्द्विजः ॥ १४

देवशर्मा :

दत्तात्रेयस्य शिष्येषु कश्चित् कोंकणनामकः ।
तताप हिमवन्मौळौ तपो वर्षशतं नृप ॥ १५

पञ्चाग्निमध्यनिरतो जितश्वासो जितेन्द्रियः ।
भस्मरुद्राक्षमालाढ्यं ध्यायं तं परमेश्वरम् ॥
तस्यैवं तपसा तुष्टो प्रादुर्भूतो हरोऽवदत् ॥ १६

सदाशिवः

वृणु कामान् प्रदास्यामि तपसा तव तोषितः ।
गच्छ त्वं सिद्धिरतुला भविष्यति तवाधुना ॥
श्रीमच्छमीवनं पुण्यं सिद्धिस्थानं तदुच्यते ॥ १७

जप्येशात् दक्षिणेभागे कावेर्याः क्रोशकद्वये ।
वीणानद्या दक्षिणतो मणिमुक्तानदीतटे ॥ १८

सुधापुष्करणीतीरे लिंगं तञ्जेश्वराभिधम् ।
आनन्दवल्या देव्या च दृष्टाभ्यर्च्य प्रणम्य च ॥ १९

तदीशान्यां वसिष्ठेशं तीर्थं वासिष्ठ संज्ञिकम् ।
तद्दक्षिणेस्ति मे लिंगं श्रीमत् करतलेश्वरम् ॥ २०

देवतीर्थ तटेदृष्ट्वा यत्रतेपे पराशरः ।
तत्र ते तपसः सिद्धिः भविष्यति न संशयः ॥ २१

करिकालाख्य चोळेन लिंगं यत्र प्रतिष्ठितम् ।
बृहदीश्वरमुत्तुङ्गं बृहन्नायिकयार्च्य सः ॥ २२

उत्तुंग गर्भभवने शिवगंगा सरस्तटे ।
तदुत्तरे कोंकणाख्यं लिंगं त्वं स्थाप्य पूजय ॥ २३

एवं शिवस्य वचसा तुष्टोभ्यागात्स सिद्धकः ।
केदारकाशी काञ्च्यादीन्नद्यः पुण्यस्थलानि च ॥ २४

कावेर्युभयतस्तीरे श्रीकण्ठादीन् विलोक्य च ।
सिद्धः शमीवनं प्राप्य प्रेतिष्ठाप्यार्चयच्छिवम् ॥ २५

कोंकणेशाख्यया तत्र भक्तियुक्तो जितेन्द्रियः ।
भस्मरुद्राक्षमालांगो जटिलो वल्कलाजिनी ॥ २६

रुद्रपञ्चाक्षर जपात् नान्यात्किञ्चिन्नजप्तवान् ।
तत्र तेपे तपस्सिद्धः तदग्रे सिद्धतीर्थके ॥ २७

एवं द्वादशवर्षान्ते सिद्धस्य पुरतो हरः ।
प्रादुर्भूय वृषारूढः सहज्ञानाख्ययांबया ॥ २८

कन्दर्पकोटिलावण्य कमनीयतराकृतिः ।
गंगाचन्द्रकलामौळिः नीलकंठस्त्रिलोचनः ॥ २९

तादृशं कोंकणेशानं नत्वा सिद्धोऽब्रवीत् हरम् ।
कोंकणेशाख्यतल्लिंगात् निर्गतं त्वादिकारणम् ॥ ३०

कोंकणसिद्धः

जयशंभो विरूपाक्ष जय चन्द्रकलाधर ।
जय कंजाक्ष पूज्यांघ्रे पाहिमां कोंकणेश्वर ॥ ३१

जय प्रणतवृन्तार जयवेदान्तबोधित ।
जयोत्तुंग वृषारूढ कोंकणेश्वर पाहिमाम् ॥ ३२

जय योगीन्द्र वन्द्यांघ्रे जयभोगीन्द्रकंकण ।
जय व्याघ्राजिनधर कोंकणेश्वर पाहिमाम् ॥ ३३

जयाष्टमूर्ते कालघ्न जयदक्षमखांतक ।
जय त्रिशूल हस्ताब्ज कोंकणेश्वर पाहिमाम् ॥ ३४

जयानन्द गुणस्तोम जय सामरवप्रिय ।
जय व्योम महाकेश कोंकणेश्वर पाहिमाम् ॥ ३५

सूतः

एवं स्तुवन्तं तं सिद्धं कोंकणं कोंकणेश्वरः ।
प्राह त्वत् पूजिते लिंगे निवसाम्यत्र कामदः ।
मदग्रतस्सिद्धतीर्थे स्नात्वा दृष्ट्वा तु मां स्तुवन् ॥ ३६

स्तोत्रेणानेन हे सिद्ध मत्पार्श्वे वसतां नृणाम् ।
मृतानामत्र कैलासं दास्यामि नियमेन वै ॥ ३७

सर्वेषामत्र भक्तानां वसतांमद्रिलोकनात् ।
पुण्येषु सर्वकालेषु प्रदोषे सोमवासरे ॥ ३८

शिवरात्र्यां नराणां वै मत्कैंकर्य रतात्मनाम् ।
न यमो यमदूतो वा प्रभवन्ति प्रधर्षितुम् ॥ ३९

सिद्धिस्ते तपसो जाता कैलासं गच्छमाचिरम् ।
स सिद्धस्सं प्रणम्येशं ययौ कैलासपर्वतम् ॥ ४०

सांबस्तस्मै वरं दत्वा तस्मिन् लिंगे तिरोदधे ।
विमानेनार्कवर्णेन भ्राजमानो मुनीश्वराः ॥ ४१

॥ इति श्रीभविष्योत्तरेमहापुराणेकोंकणेश्वरमाहात्म्ये
वीरमार्ताण्ड चोळचरिते विंशोऽध्यायः ॥

*

## ॥ अथ एकविंशोऽध्यायः ॥

सूतः

पुनरन्यां कथां वक्ष्ये कोंकणेशस्य शूलिनः ।
इत्युक्तवन्तं राज़ासौ वीरमार्ताण्ड चोळराट् ॥ १

सदाशिव कथास्वाद पीयूषप्रदमात्मनः ।
पुनः पप्रच्छ देवस्य देव्याश्चरितमुत्तमम् ॥ २

देवशर्मा :

तत्र तञ्जापुरेकापि वणिक्कन्या बभूव ह ।
बाल्यात्प्रभृति देवस्य कोंकणेशेति भक्तिता ॥ ३

पित्रामात्रा तदाकाल्ये प्रार्थिता बन्धुभिस्तदा ।
वैवाहिक विधिंकर्तुं समानीय वणिक्सुतम् ॥
दृष्ट्वारुरोद सा कन्या उवाचाथ स्व मातरम् ॥ ४

कन्या :

नाऽहं विवाह्या केनापि पतिः पशुपतिर्मम ।
वरं जरा मृत्ययुतं नाहं कांक्षेत्व सत्यतः ॥ ५

कांक्षेऽहं मदनारातेः पाणिग्रहण मङ्गळम् ।
एवं कालापनयनात् लग्नविघ्नं बभूव ह ॥ ६

तस्यामेव तदा रात्रौ कोंकणेशो विवाह्यताम् ।
बबन्ध तत् कण्ठदेशे सूत्रमंगळमीश्वरः ॥ ७

सर्वाभरणशोभाढ्यां विवाहा कल्पधारिणीम् ।
शिवस्सुप्त जने रात्रौ ऋषिदेव समन्वितः ॥ ८

निनायस्वालयं शम्भुः वेदघोषैस्ससंभ्रहात् ।
ज्ञानांबायास्तदा प्राच्यां तस्याः स्थानमकल्पयत् ॥ ९

अदृष्ट्वा प्रातरुत्थाय कन्यां दृष्ट्वा शिवालये ।
नेतुं ययुस्ते वणिजः तत्र खाद्वागुवाच ह ॥ १०

वाणी :

नेयं विवाह्यमर्त्येन शिवस्य दयितात्वियम् ।
शिवभक्त कुलेजाता यथा पाण्ड्यकुले पुरा ॥ ११

परिणीता महेशेन वणिजो वेश्मगच्छत ।
पुष्पवृष्टिः पपातास्याः मूर्ध्नितेषां च पश्यताम् ॥ १२

तां ते देवालयेस्थाप्य वणिजो हर्षतो ययुः ।
अद्यापि वणिजः कन्या शैलीतिष्ठतिचालये ॥ १३

कोंकणेशस्य दयिता पूजिता तत्र कामदा ।
एतत् तेप्युदितं भूप कोंकणेशस्य वैभवम् ॥ १४

श्रुत्वा पठन्नपि नरः सर्वपापैः प्रमुच्यते ।
तत् श्रुत्वा वीरमार्ताण्ड चोळस्तत्भक्तिमानभूत् ॥ १५

जीर्णोद्धारं गोपुरञ्च प्राकारं मण्टपानि च ।
विते ने चोत्सवं शंभोः वैशाखेचाकरोन्नृपः ॥ १६

तस्यपुत्रवरोजातः कीर्तिचोळ इति श्रुतः ।
तं स्थाप्य स्वपदेराजा कीर्तिमूर्तिमिवापरम् ॥ १७

राज्यं षट्षष्ठिवर्षाणि कृत्वान्ते शिवमाप्तवान् ।
पत्न्या सहाय स्तेजस्वी नन्दी भृंगी समर्चितम् ॥ १८

वीरमार्ताण्डचोळस्य ये पुण्यां प्रथितां कथाम् ।
श्रृण्वन्ति शिवसारूप्यं तेषामेव न संशयः ॥ १९

॥ इति श्री भविष्योत्तरेमहापुराणे कोंकणेश्वरमाहात्म्ये वीरमार्ताण्डचोळ चरिते एकविंशोऽध्यायः ॥

## ॥ अथ द्वाविंशोऽध्यायः ॥

सूतः

तस्मिन् गते स कैलासं तत्सुतः कीर्तिवर्धनः ।
चोळेन्द्रोभूत्तस्यभार्या नाम्ना कमलिनीति च ॥ १

सूर्य शेखर पाण्ड्यस्य तनया विनयोज्वला ।
तथा शशास वसुधां वसुधाधर धैर्यभृत् ॥ २

विनयाचार चरितैः पौरामात्य समन्वितः ।
चकार शिवधामानि जीर्णान्यप्युज्जहार सः ॥ ३

अन्वर्थनामा नृपतिः कार्तिकेये स भक्तिमान् ।
षष्ठीव्रतादिकं चक्रे पुत्रार्थं कीर्थिचोळराट् ॥
तमागत्य गुहः स्वप्ने प्राहवाचासुधामुचा ॥ ४

स्कन्द ः

त्वत्भक्त्या परितुष्टोऽस्मि भार्याया व्रतयुक्तया ।
तव पुत्रं प्रदास्यामि चोळवंश धुरन्धरम् ॥ ५

नाम्ना विजयचोलाख्यं रिपूणां जयकांक्षिणम् ।
ममास्ति तञ्जानगरे धामवै कोंकणेशितुः ॥ ६

नैरृते भूतले मग्नो सनाम्ना गुहपर्वतः ।
तमुद्धृ नृपश्रेष्ठ तत्र कूपोस्ति पावनः ॥ ७

शक्तिकूप इति ख्यातः षष्ठ्यां तज्जलमज्जनात् ।
अपुत्राणां पुत्रदंस्यात् तत्र मदर्शनं नृणाम् ॥ ८

कार्तिक्यां कृत्तिकायोगे तत्र मद्वीक्षणं कुरु ।
सर्वान्कामनवाप्नोति पुत्रं प्राप्नु हि भूमिप ॥ ९

इत्युक्तान्तर्हितः स्कन्दः राजा प्रातस्तदन्वशात् ।
अमात्यान्वीक्षणे तत्र तज्जीर्णं भूतलेस्थितम् ॥ १०

तच्छिल्पैर्नूतनं चक्रे स्कन्दस्यालयमुन्नतम् ।
सोपानपद्धतिंकूपमुद्‌धार . स कीर्तिमान् ॥ ११

स्कन्दं बर्हिवहं पूज्य षष्ठ्यां तुष्टाव भूमिपः ।

कीर्तिचोल :

नमस्ते शक्तिहस्ताय षण्मुखाय गुहाय च ॥ १२

शूरतारक संहर्त्रे पात्रे सर्व दिवौकसाम् ।
सेनानांपतये तुभ्यं नमस्ते प्रणवात्मने ॥ १३

गुरवे सर्व मन्त्राणां कार्तिकेयाय ते नमः ।
विधायिने नमस्तुभ्यं गांगेयांबुज मालिने ॥ १४

महार्हावर भूपाय पार्वती सूनवे नमः ।
इत्थं संस्तुवतो स्याग्रे गुहोवाक्यमुवाच ह ॥ १५

॥ इति भविष्योत्तरेमहापुराणे कार्तिकेयस्तवानुवर्णनं नाम
द्वाविंशोऽध्यायः ॥

*

## ॥ अथ त्रयोविंशोऽध्यायः ॥

सूतः

स्कन्द :

तवस्तुत्याद्य तुष्टोऽहं त्वत्कैंकर्येण मे नृप ।
त्वत्पत्नी व्रतयोगेन सुतस्ते भविता नृप ॥ १

सर्वत्रारिजयस्तस्य जयचोळात्मजस्य ते ।
एवं संस्तुवतः षष्ठ्यां कूपस्य स्नानमात्रतः ॥ २

वन्ध्यापि लभतेपुत्रं यदि सा मम भक्तिभृत् ।
एवं वरोमयादत्तः अत्र संवसतां नृणाम् ॥ ३

क्षेत्रस्थितानां शक्तीनां विष्णोः शास्तुर्गणेशितुः ।
तेन ते फलमुत्कृष्टं अस्मिन्क्षेत्रालये कृते ॥ ४

इत्युक्त्वान्तर्दधे स्कदः स राजा स्कन्दवाक्यतः ।
नवशक्त्यालयंचक्रे दिक्षुमार्यां स्तदा नृपः ॥ ५

रेणुकाया मध्यपुरं गणेशस्यापि दक्षिणे ।
यत्र यत्र स्थितानां हि तत्र तत्रैव कारयत् ॥ ६

शास्तुः प्रतीच्यां नृहरेः नीलमेघस्य चोत्तरे ।
कैलासनाथ विष्णोश्च धामान्याधत्त भूपतिः ॥ ७

[illegible] तान् देवान् पुरस्यास्यैव रक्षकान् ।
[illegible] [illegible] पशुर्भ्योवाल पीडनैः ॥ ८

वसिष्ठेशालयं चैव वैद्यनाथालयं व्यधात् ।
मारी संपूजयामास क्षेत्रप्राग्भाग वासिनीम् ॥ ९

तत्कालेन च तत्पत्नी गर्भिणी भूत् तदाश्रयत् ।
प्रासूत तनयं काले कुमारमिव पार्वती ॥ १०

नामचक्रे पितातस्य जयचोळाख्यया तदा ।
धनं धान्यं तथावासो गावः प्रादान्नृपोद्विजान् ॥ ११

पूजयामास क्षेत्रस्थान् देवाश्च नृपसतमः ।
जय चोळोपि ववृधे शुक्लपक्ष इवोडुराट् ॥ १२

गुरुभ्योभ्यस्तवान् विद्याः चतुष्षष्टि कलात्मिकाः ।
केरलेशस्सुतां तस्मै ददावाहूय तं सुतम् ॥ १३

नाम्ना काञ्चनमालां तां काञ्चनाङ्गीं नृपोत्तमः ।
पुत्रेण स्नुषया पत्न्या कीर्तिचोळः शशासगाम् ॥ १४

नदीं कीर्तिमतिं चक्रे चोळेशस्सस्यवृद्धये ।
सप्त सप्त च वर्षान्ते स चोळः शिवमभ्यगात् ॥ १५

स्वकेपदं जयंपुत्रं अभिच्य प्रियायुतः ।
प्राप्य शंकर सारूप्यं कीर्तिमूर्त्यात्मनास्थितः ॥ १६

तत्पुत्रो जयचोळो वै धर्मतः पालयन् तदा ।
अनुरूप गृहिण्यातु मन्त्रिभिः शास्त्रकोविदैः ॥ १७

मन्त्रज्ञ मन्त्रिवृद्धेन संमन्त्र्य स चकार ह ।
कैंकर्यमातनोच्छम्भोः धामान्यप्युज्जहार सः ॥ १८

अग्नीश्वरस्य देवस्य कदळीवनमस्य च ।
पुत्रव्यञ्जन देवस्य श्रीवाञ्छयेशस्य शूलिनः ॥ १९

गंगुहूंनाम नागरं जयचोळपुरं नृपः ।
बृहदीश्वरधाम्नोस्य पादोनं धामचातनोत् ॥ २०

संपूज्य तस्य नप्तारं सदृशं सोमवर्मणः ।
श्रीमुष्णमुद्गनगरं श्रीमत् वृद्धाचलालयम् ॥ २१

कालहस्तीश सद्मापि मणिमुक्तानदीतटम् ।
ववन्ध तत्र चान्यानि स्थानानि जयचोलराट् ॥ २२

एवं कैंकर्य कृच्छंभोः स नृपः षष्ठिहायने ।
पुत्रं कनकचोळाख्यं लब्ध्वा शंभोः प्रसादतः ॥ २३

तं पदे संप्रतिष्ठाप्य मन्त्रिभिः शास्त्रकोविदैः ।
पत्न्या साकं मुदाचोळः शिवावासमगान्नृपः ॥ २४

संप्राप्य शिवसारूप्यं वसेत् कैलास पर्वते ।

सूतः

येयिमां कीर्तिचोळस्य शिवभक्ति च पावनीम् ॥
कथां कथयतां भक्त्या शिवेभक्तिः स्थिरा भवेत् ॥ २५

॥ इति भविष्योत्तरेमहापुराणेकार्तिकेयाख्याने कीर्तिचोल जयचोल चरिते त्रयोविंशोऽध्यायः ॥

*

## ॥ अथ चतुर्विंशोऽध्यायः ॥

सूतः

ततः कनकचोळोऽभूत् तत्सुतः पृथ्वीपतिः ।
तत्पत्नि चम्पकाङ्गीति नाम्ना विक्रमवंशजा ॥ १

तथा शशास वसुधां मन्त्रिभिः सैन्यपालकैः ।
धर्मतो नीतिशास्त्रज्ञैः पौरेषु पितृवन्नृपः ॥ २

पारंपर्यक्रमं प्राप्तां भक्तिं चक्रे महेश्वरे ।
राजाश्वगजवीराणां भस्मरुद्राक्ष कञ्जुकान् ॥ ३

धारयामास नियमात् तेनतस्य जयोभवत् ।
तद्राष्ट्रेषु जनास्सर्वे भस्मरुद्राक्ष धारिणः ॥ ४

त्रिपुण्ड्रफालास्सर्वेऽपि जैनाम्लेच्छाश्च संकराः ।
नृपाज्ञया धारयन्ति निष्पापास्तेन ते भवत् ॥ ५

शिवोत्सवाश्च सर्वत्र नानातूर्यरवास्तथा ।
पठतां वर्णिबृन्दानां वेदशास्त्र ध्वनिस्सदा ॥ ६

वेदत्रयाणां शालासु यज्ञैः मन्त्रक्रिया ध्वनिः ।
सदाशिव पुराणानां समाजः शृण्वतामभूत् ॥ ७

नानाधनैश्च धान्यैश्च विपणाश्च प्रसादिताः ।
हृष्टपुष्ट नरानार्यः स्वस्वधर्मे व्यवस्थिताः ॥ ८

शस्त्रज्यातल निर्घोष संगीतध्वनिरुद्धभौ ।
शिवालय कृतां तत्र शिल्पानां टंकनिस्वनः ॥ ९

कालवर्षी च पर्जन्यः जन्यं नाभूत् क्वचित्क्षितौ ।
तस्यैवं कुर्वतोराज्यं कावेरी सरितां वरा ॥ १०

पाताळमूलमगमत् दक्षिणावर्तकेस्थले ।
श्वेताख्यगणपत्यैव पुरस्तात् शिवसन्निधौ ॥
विचुकुशुर्ज्ञनास्सर्वे सस्यनाशोह्यभूत्क्षितौ ॥ ११

चारैर्विदित वृत्तान्तः कनकाख्यस्सचोळराट् ।
हयमारुह्य सैन्येन तत्रागात्मन्त्रिभिर्वृतः ॥ १२

दृष्ट्वा कवेरजापूरं बिले सर्वं प्रवेशितम् ।
तद्रोद्धुं नाशकाद्यत्नैः कृतैरपिमुहुर्नृपः ॥ १३

निर्विण्णहृदयो भूपः किंकरोमीत्यचिन्तयत् ।
नत्वा धेनुपुरेशानं देवौ श्वेतविनायकम् ॥ १४

स शिष्ये सन्निधौ तेषां वागभूदशरीरिणी ।

वाणि :

त्वयि प्रविष्टे तु बिले अन्येवापि तपस्विनी ॥ १५

तद्बिलं पिहितं भूयात् नान्योपायेन भूपते ।
यथा पूर्वं प्रवाहोस्यात् कावेर्याः संभविष्यति ॥ १६

सर्वेषां च हितं भूयात् जनानां सस्यवृद्धितः ।
शरीरमस्थिरं राजन्! कीर्तिराचन्द्रतारकम् ॥ १७

शिबिर्दधीचिः कर्णश्च ददुः स्वाङ्गं द्विजातये ।
तान्नपश्यामहे भूमौ तेषां कीर्तिः स्थिराऽभवत् ॥ १८

इत्थं वाण्या वचःश्रुत्वा तदा कनकचोळराट् ।
स्नात्वा कन्नेरजातो ये भस्मरुद्राक्ष भूषणः ॥ १९

सर्वेषां हितमाकांक्षन् भार्याया संदधे मनः ।
नत्वा महेशं विघ्नेशं प्रवेष्टुं तद्बिलं ययौ ॥ २०

पश्यतां साश्रुनेत्राणां पौराणां तत्र लक्षशः
गृह वृक्षाग्रहर्म्येषु स्थितानार्यो नरानृपम् ॥ २१

पश्यन्ति तत् पृष्ठगतां चम्पकाङ्गीं नृपप्रियाम् ।
नृपं तं मन्त्रिवृद्धोऽन्यो दृष्ट्वा साहसमास्थितम् ॥
गत्वाप्रांजलिराहेत्थं राजानं विनयोज्वलम् ॥ २२

मन्त्रिवृद्धः

कावेर्याः कुंभघोणस्य उत्तरे संस्थितं मुनिम् ।
कोटीश्वरे तपस्यातं हेरण्डं नाम वै मुनिम् ॥ २३

अनापृच्छ्य मुनिं तं च प्रणिपत्य नृपोत्तम ।
नैव प्रवेशनीयन्ते बिलं चोळ महीपते ॥ २४

तथेति मन्त्रिवचन मनुमान्य ययौ नृपः ।
प्रणम्य भार्यया राजामुनेरग्रे व्यवस्थितः ॥ २५

'दीर्घायुर्भवचोळेति भवदीर्घ सुमङ्गळा ।
सुपुत्रिणी भवेत्याशीः मद्वाक्यं नान्यथा भवेत्' ॥ २६

इत्थं हेरण्डवचसा तुष्टः कनकमन्त्रिणा ।
राजाविचारहृदयः किमद्य मम संस्थितम् ॥ २७

बिलप्रवेशिनेविघ्नं सर्वेषां हितकांक्षिणः ।
हेरण्डं तं मुनिं नत्वा प्रोचुस्ते नृपमन्त्रिणः ॥ २८

मन्त्रिण :

सत्यंभगवतो वाक्यं राजायां कृत निश्चयः ।
राज्ञानेन प्रवेश्याथ राज्ञीयं च बिलेमुने ॥ २९

दक्षिणावर्तकस्थाने बिलेप्राप्ता मरुद्वृधा ।
तेन सस्योपनाशोभूत् प्रजानां च क्षयोभवत् ॥ ३०

कस्मिंस्तपस्विन्यपि वा नृपेवापि प्रवेशिते ।
तद्बिलं पिहितं भूयात् इति रवात् अभवत् च वाक् ॥ ३१

पौराणां रक्षणं कार्यं राज्ञां धर्म सनातनः ।
भवन्तमनुमान्यैव प्रवेष्टुं यतते बिलम् ॥ ३२

कावेर्या निर्गमोभूयात् नृपस्यास्य प्रवेशनात् ।
अनुजानीहि संवेन चक्षुषा नृपसत्तमम् ॥ ३३

त्वद्वदस्सत्यमेवास्तु नान्यथा ऋषिभाषितम् ।
शिवभक्तेक्षणादेव शिवलोकोस्य वै भवेत् ॥ ३४

इत्यमात्य वचः श्रुत्वा विचार्य सुचिरं मुनिः ।
प्राहतान् तत्रराजानं राज्ञींपौरान् पुरः स्थितान् ॥ ३५

हेरण्डमहामुणि :

वृद्धोऽहं तपसा क्षीणः कैलासमभि कामये ।
तपोस्य राज्ये सुचिरंतप्तं कोटीश्वराग्रतः ॥ ३६

देयः सर्वोपकाराय मयादेहो न संशयः ।
दधीचिर्देवकार्यार्थे त्यक्त्वादेहं दिविस्थितः ॥ ३७

न मेवागनृतासत्यं भविष्यति न संशयः ।
चिरञ्जीवत्वयं राजा राज्ञीयं स्यात् सुमङ्गळा ॥ ३८

पुत्रोस्तु चास्य भविता शिवकैंकर्य तत्परः ।
पौराणां रक्षकश्चास्तु प्रनेश्यामीह तत्विलम् ॥ ३९

राजा :

तत् श्रुत्वा नृपतिःप्राह नैवंकार्यं मयिस्थिते ।
असत्या विप्रहत्या वै शिवभक्तस्य मत्कृते ॥ ४०

तत् श्रुत्वा वचनं राज्ञः प्राह हेरण्डको मुनिः ।

हेरण्डमहामुनि :

सर्वलोकोपकाराय दास्येहं हर्षतः तनुम् ॥ ४१

शिवाग्रे यस्त्यजेद्देहं शिवसायुज्यमेति सः ।
नचात्र पापलेशस्ते भविता नृप सत्तम ॥ ४२

सूतः

इत्युक्तस्य मुनेर्मूर्ध्नि पुष्पवृष्टिः पपात वै ।
देवदुन्दुभयोनेदुः विमानं चागतं दिवः ॥ ४३

हेरण्डकोद्रुतं चागात् नृपपौरश्च संयुतः ।
स्नात्वा कवेरजातो ये नत्वा विघ्नेश्वरं शिवम् ॥ ४४

भस्मरुद्राक्ष दृक् ध्यायन् महेशं हृदये मुनिः ।
तद्बिलं त्रिः परिक्रम्य पपात मुनिपुंगवः ॥ ४५

तद्बिलादुदभूत् लिंगं हेरण्डेश्वर नामकम् ।
कावेर्याश्च प्रवाहोऽपि यथापूर्व मवर्तत ॥
विमानमध्यगो भूत्वा नृपं हेरण्डकोऽब्रवीत् ॥ ४६

हेरण्डमहामुनि :

गच्छामि शिवलोकाय सर्वोपकरणादहम् ।
स्थानेऽत्र कुरु कैंकर्यं कोठीशस्य नृपोत्तम ॥ ४७

सूतः

राजा च शिवधामानि कारयामास शिल्पिभिः ।
कोटीश्वरालयं चक्रे प्राकारवर गोपुरम् ॥ ४८

दक्षिणावर्तकेशस्य प्राकार गोपुराण्यपि ।
गर्भगेहं गणेशस्य चक्रे कनकचोळराट् ॥ ४९

तदग्रे मण्टपं दिव्यं श्रमस्तंभवरान् नृपः ।
मध्यार्जुनेश नैऋत्यां धाम नागेश्वरस्य वै ॥ ५०

उत्तुंगान्यपि वै चक्रे गोपुराण्यथ दिक्ष्वपि ।
अन्यानि शिवधामानि कृत्वाराज्यं स्वधर्मतः ॥ ५१

सप्तत्रिंशोऽपि वर्षाणि परिपालय वसुन्धराम् ।
पुत्रं सुन्दरचोळाख्यं अभिषिच्य शिवंययौ ॥
पत्न्यासहानयाराजा शिवलोकं नृपो ययौ ॥ ५२

यः शृणोती ममध्यायं श्रुत्वाचोळेश्वरोद्भवं ।
न पापैरभिभूयेत्सः पुण्यैस्समभि पूर्यते ॥ ५३

हितन्नवाच्यमहितन्नवाच्यं
हिताहितं नैव तु भाषणीयम् ॥
हितोपदेशेन कपालभिक्षुः
हेरण्डको नाम बिलं प्रविष्टः ॥ ५४

॥ इति श्रीभविष्योत्तरेमहापुराणे कनकचोल चरिते
चतुर्विंशोऽध्यायः ॥

*

## ॥ अथ पञ्चविंशोऽध्यायः ॥

मुनयः

अहोपुण्यकृतोराज्ञः चोळेन्द्रस्यापि सत्तम ।
अज्ञान जनिता हत्या केन पुण्येन नाशिता ? ॥
कस्मिन् स्थाने विनष्टाभूत् ? किं कृतं तेन भूभुजा ? ॥ १

सूतः

राजासुन्दरचोळोऽभूत् पितर्युपरते तदा ।
चित्रवल्ली भवत्तस्य भार्या चेरपतेस्सुता ॥ २

तयान्वशासद्वसुधां सुधास्वातिपतेरिव ।
ततान शिवधामानि भक्तियुक्तो महेश्वरे ॥ ३

त्रिपुण्ड्ररुद्राक्षधरः दधार मकुटं नृपः ।
कुळोत्तुंगाख्यचोळाय यद्दत्तं शंभुना पुरा ॥ ४

चोळेन्द्र विरुदाधारं हेम पट्टं नृपैर्धृतम् ।
शिवभक्तार्पितधनः शिवलिंगार्चको नृपः ॥ ५

स राज्यं पालयामास मन्त्रिभिस्सह तन्त्रिभिः ।
नित्यं चकार सर्वाणि राजकार्याण्यसौ नृपः ॥ ६

पाण्ड्याय प्रददौ कन्यां स नाम्नाचोत्फलावतीम् ।
कालकालाख्य चोळं स जनयामास शास्त्रतः ॥ ७

स चक्रे शम्भु धामानि पूजोत्सवयुतास्वपि ।
पितृमातृ पदेरक्तः कालकालो भवत्तदा ॥ ८

तत्सुतो विनयाचारः शस्त्र शास्त्रकृतश्रमः ।
केरळाधीश कन्यान्तां नाम्ना गुणवतीं पिता ॥ ९

सतस्य कारयामास वैवाहिक विधिंमुदा ।
तथा स विजहारासौ राज्ञः पुत्रो मुदा सदा ॥ १०

तस्यैवं शासतः पृथ्वीं कश्चित्कार्पाटिकद्विजः ।
राजद्वारमुपागम्य राजदर्शनकांक्षया ॥
द्वास्थानुवाच सौवर्णवेत्रपार्णा नवस्थितान् ॥ ११

विप्रः

निवेद्यतां मां चोळाय काश्यामत्र समागतम् ।
रामेश्वरं गमिष्यामि भार्या मे गर्भिणीपथि ॥ १२

अशक्ता गमने राज्ञः सकाशे स्थापयाम्यहम् ।
राजामातापिता मह्यं चोळानां विप्रपालनम् ॥ १३

धर्मः किल ततोलज्जां विहायेत्थं वदाम्यहम् ।
क्षिप्रं निवेद्यतांराज्ञे मदाशयमिमं वुधाः ॥ १४

दयां कुरुध्वं भोद्वास्थाः श्रीगंगां नेतुमुत्सहे ।
रामेश्वराभिषेकाय नकिञ्चित्प्रार्थयाम्यहम् ॥ १५

द्वास्थाः तद्वचसागत्वा सभास्थं सुन्दरं नृपम् ।
पार्श्वतो वीजितसित चामरद्वय शोभितम् ॥ १६

मन्त्रिभिः कवि विद्वांसैः गीतज्ञैः दैवचिन्तकैः ।
सदाशिव पुराणोक्त क्षेत्रसूचन तत्परैः ॥ १७

पुराणानां विशेषज्ञैः मन्त्रज्ञैः सुसमावृतम् ।
सेनापतिभिर्न्यैश्च विनीतै रुपसेवितम् ॥ १८

सिंहासनस्थं नत्वाते प्रोचुः प्राञ्जलिपाणयः ।
राजन् चोळकुलाब्जार्क प्रतापावनताखिल ॥ १९

कश्चित् कर्णाटिको विप्रः द्वारितीष्ठति भार्यया ।
तृषार्त चातकाळीव मेघं त्वां द्रष्टुमिच्छति ॥ २०

तत् द्वास्थवचनं श्रत्वा राजाप्राह कृताञ्जलीन् ।

राजा :

प्रवेश्यतां द्विजः कोसौ भार्यया सह मचिरं ॥ २१

गत्वा ते तं समानिन्युः द्वास्था विप्रं सभार्यकम् ।
सभां प्रवेशयामासुः नृपो नत्वाभिपूज्यतम् ॥ २२

तद्दत्तां विश्वनाथस्य भूतिं फालतले दधौ ।
उवाच विप्रं वाचासौ विनयोदारसद्वचः ॥ २३

सुन्दरचोळ :

कुतः समागतो ब्रह्मन् देशोऽयं पावनीकृतः? ।
मत्तः किमिच्छते चित्तं भवतः करवाण्यहम् ॥ २४

श्रुत्वा सुन्दरचोलस्य वचनं सुन्दरार्थदम् ।
उवाच हर्षितो विप्रो राजानमभिनंद्य वै ॥ २५

विप्रः

जीव जीव शतं राजन् विप्रभक्तिस्तवेदृशी ।
चोळाब्धिकुलचन्द्रस्य नैतच्छित्रं वचस्तव ॥ २६

नधनं प्रार्थयेत्वत्तः अन्नं वासोग्रहं नृप ।
विश्वेश्वरान्नपूर्णायाः प्रसादात् सर्वमस्ति मे ॥ २७

बालेयं गर्भिणीभार्या यावदागमनं मम ।
पितरीव त्वयाश्वस्ता राजन् संरक्ष्यतामियम् ॥ २८

तं तथेत्याहराजासौ विशेषात्पूज्य दंपती ।
तत्रैकां रजनीमुष्य ययौ रामेश्वरं द्विजः ॥ २९

विप्रपत्नी तदाराजा पूज्यतां भोजनार्हणैः ।
पाल्यतामित्यशात् राजा राज्ञीमन्तः पुरेश्वरीम् ॥ ३०

आज्ञापयत्सौविदल्लान् चेद्र्यां वर्षवरं नृपः ।
तत्र सा निवसन्ती च राज्ञा संपूजिता सुखम् ॥ ३१

भक्ष्य भोज्यैश्च वासोभिः राज्ञासार्धं मुमोद सा ।
राज्ञः चेट्टीगणैर्नित्यं विप्रपत्न्यान्वमोदत ॥ ३२

एवं स्थिते वर्षमात्रात् तद्भर्त्रा तत्रचागतः ।
रामेश्वराभिषेकञ्च कृत्वा गंगांभसाद्विजः ॥ ३३

हालास्यं शालिवाटीशं कन्यातीर्थादिकं भ्रमन् ।
दृष्ट्वा स केरळान्पाण्ड्यान् आजगाम नृपालयम् ॥ ३४

स्वपत्न्याश्चेष्टितं ज्ञातुं बालायास्सत्रपस्य च ।
अन्धकारे वसन्रात्रौ स्वपत्न्याः करमग्रहीम् ॥ ३५

केन दुष्टेन मत्पाणिः स्पृष्टो? हाहेत्यथाह सा ।

ब्राह्मणी :

पितृवत्पालकेमेघस्थिते चोळमहीभुजी ॥ ३६

मां चित्रवल्ली मातेव सदारक्षति चात्र वै ।
इत्याक्रंदं विप्रपत्न्या श्रुत्वागात् करवाळधृक् ॥ ३७

यज्ञोपवीतवच्चैनं राजा चिरच्छेद तं द्विजम् ।
दृष्ट्वा तं दीपिका दीप्त्या राजा ब्रह्मवधार्दितः ॥ ३८

तत्पत्नी रुरुदे पश्चात् मृतं भर्तारमीक्षति ।
अनुगन्तुं मनोदघ्रे प्रार्थयामास सा नृपम् ॥ ३९

राजन् अज्ञानतः प्राप्ता त्वया वध्या सुदारुणा ।
उषिताहं त्वयिनृप राज्ञा पुत्रीव लालिता ॥ ४०

त्वं पिता सैव माता मे भर्त्रागच्छाम्यहं दिवम् ।
भर्ता मे दैवतं राजन् तेन सार्धं मृतिर्वरा ॥ ४१

नाहं मुहूर्तं जीवामि नृपानुज्ञां प्रदेहि मे ।
स विप्रपत्न्या वचसा स्वदुःखाद्दुःखितोवदत् ॥ ४२

राजा :

किमद्यमेसमायातं विश्वस्त ब्रह्मघातकम् ।
ब्राह्मण्यास्त्वां वधं घोरं पातकं पापिनो मम ॥
किं मे राज्येन दैवेन कृतमीदृगहो वद ॥ ४३

धिक् मां चोळेन्द्रकान्तार दाहकं ब्रह्म घातकम् ।
पुण्यश्लोक चरित्राणां चोळेन्द्राणां यशोहनम् ॥ ४४

इत्थं चिरं तं दुःखस्थं तं मर्त्याः पर्यसां त्वयम् ।

अमात्य :

राजन् कालकृतं सर्वं भवता ज्ञानतः कृता ॥ ४५

ब्रह्मवध्यादारुणेयं प्रायश्चित्तं कुरु प्रभो ।
अतिनिर्बन्ध कारणात् ब्राह्मणीयं मरिष्यति ॥ ४६

राजा :

यावज्जीवं विप्रपत्नी उष्यतां पूजितामया ।
व्रतानि कुरुदानानि प्रसादः क्रियतां मयि ॥ ४७

इत्युक्ता सा नृपेनैवं गच्छामीत्येव सा वदत् ।
राज्ञी तत्रत्यजनता साश्रुनेत्रा भवत्तदा ॥ ४८

तां स्नाप्य भूष्य वस्त्रैश्च गन्धैःपुष्पैः द्विजेन वै ।
रुदंस्तौ दाहयद्राजा इन्धनेन विधानतः ॥ ४९

तस्य विप्रेण कृत्यानि द्वादशाहं नृपांव्यधात् ।
गयायां दापयामास पिण्डंदद्यात् पृथक् पृथक् ॥ ५०

॥ इति श्री भविष्योत्तरेमहापुराणे सुन्दरचोळाय ब्रह्महत्यागमो नाम पञ्चविंशोऽध्यायः ॥

---

## ॥ अथ षट्विंशोऽध्यायः ॥

---

मुनयः

अहो पुण्यकृतोराज्ञः चोळेन्द्रस्यापि सत्तम ।
अज्ञान जनिताहत्या केनपुण्येन नाशिता ? ॥ १

कस्मिन्स्थाने विनष्टाऽभूत् ? किं कृतं तेन भूभुजा ? ।
तं नो वदविशेषेण सूतचित्रं प्रभाषसे ॥ २

मुनीनां वचसा चेतः चोळेन्द्रस्येव तां कथाम् ।
उवाच प्राञ्जलिर्भूत्वा मुनिभ्यो कथयत्तदा ॥ ३

सूतः

एवं विप्रवधाद्घोरात् सन्तप्तश्चोळ भूपतिः ।
दुःखितः स दिवारात्रं शेते भुङ्क्ते न चोळराट् ॥ ४

निष्टप्तकनकांगोसौ वैवर्ण्यं स नृपोभ्यगात् ।
अनावृष्टिरभूद्राष्ट्रे पतन्त्यशनयस्सदा ॥ ५

रात्रौ रुदन्ति विकृतं पिशाचाश्च शिवा शुनः ।
धूमावृता दिशस्सर्वाः सस्यनाशोऽभवेत्क्षितौ ॥ ६

तद्राष्ट्रेऽपसर्गाश्च बभूवुर्ब्रह्महत्यया ।
तद्दृष्ट्वा शान्तिकर्माणि राजाविप्रैरकारयत् ॥ ७

उवाच मन्त्रिणोराजा किं करोम्यहं मादृशः ।
ब्रह्महत्यार्दितोनित्यं सदासाच्छाय येवमाम् ॥ ८

कृष्णांगी घोरवदनां कराळाश्मश्रुदंष्ट्रिणी ।
तर्जयन्ती दण्डहस्ता पृष्ठतो याति मां सदा ॥ ९

केनोपायेन पुण्येन किं कृतेन सुखं भवेत् ।
विचार्य वेदशास्त्रज्ञैः तत्करिष्यामि माचिरम् ॥ १०

भवन्तु पापनाशःस्यात् मम वै नात्रसंशयः ।
तत् श्रुत्वा चोळभूपस्य मन्त्रिणो वचनं द्विजैः ॥ ११

विचार्यालोड्य शास्त्राणि मनुपाराशरस्मृतीः ।

मन्त्रिणः

अज्ञानकृत हत्यायाः प्रायश्चित्तं तनुव्ययः ॥ १२

त्वं राजन् धनधान्याढ्यः शिवागाराणि कारय ।
कावेर्याः शतकूलेषु पूजितानां महर्षिभिः ॥ १३

स्वायंभुवानां लिङ्गानां गोपुरादीनि कारय ।
क्षेत्रे क्षेत्रे विशेषेण अग्रहाराणि कारय ॥ १४

महाषोडश दानानि गोदानानां सहस्रकम् ।
कन्यादानानि भूरीणि पात्रेभ्यः कारयाऽधुना ॥ १५

देहिपात्रे कुटुंबिभ्यो वेदविद्भ्यो नृपोत्तम ।
दीनानाथांध पंगूनां संरक्षण परोभव ॥ १६

अन्नसत्रमठोद्यानतटाकादीनि कारय ।
सुवर्णतुलयादानं गोसहस्राणि तत्स्थले ॥ १७

गंगा कवेरजापुण्यनदिनां स्नानमाचर ।
सेतुं व्रज नृपश्रेष्ठ दर्शनात् पापनाशनम् ॥ १८

रामेश्वरस्य देवस्य मण्टपादीनि कारय ।
पापोपशमनार्थाय स्मृतिभिर्विहितानि वै ॥ १९

तदैव मन्त्रिवचनात् विप्राणां च महीपतिः ।
नदी नदेषु पुण्येषु स्नात्वा सेतौ शिवालयम् ॥ २०

रामेश्वरस्य वै चक्रे उत्तरे क्रोशकस्य च ।
मण्टपानि विमानानि गोपुराणि चकार ह ॥ २१

ददौ षोडश दानानि षोडशावृत्ति पार्थिवः ।
कावेर्याः शतवक्रायाः तीर क्षेत्रेषु वै नृपः ॥ २२

सूतः

गोसहस्राणि विप्रेभ्यो वेदविद्भ्योह्यदान्नृपः ।
षड्रसैः भक्ष्यभोज्यैश्च स चक्रे कोटि संख्यकम् ॥ २३

कावेर्यास्तीरयोः क्षेत्रे क्षेत्रे ब्राह्मण भोजनम् ।
कन्यादानानि भूरीणि पात्रेभ्यश्चाकरोन्नृपः ॥ २४

कार्तिके हरविष्णूनां दीपोत्सव मथाकरोत् ।
एवं निनाय दानैश्च द्वादशव्दान्यसौ नृपः ॥
तत्रागत्य नृपस्वप्ने ऊचतु द्विजदंपती ॥ २५

॥ इति श्रीभविष्योत्तरेमहापुराणेसुन्दरचोळचरिते
षट्विंशोऽध्यायः ॥

*

## ॥ अथ सप्तविंशोऽध्यायः ॥



सूतः

द्विजदंपती :

किञ्चिच्छिष्टा ब्रह्महत्या तवास्येव नृपोत्तम ।
कावेर्याश्शततीरेषु नत्वा क्षेत्रेषु शंकरम् ॥ १

पापादस्मात् महाघोरात् सर्वस्मात्मुक्तिमेष्यसि ।
अज्ञानतः कृतावद्या न त्वं सन्तप्तु मर्हसि ॥ २

गच्छावो ब्रह्मणस्थानं त्वया संपूजितौ भुवि ।
दृष्ट्वा स्वप्नं तथा प्रातः मन्त्रिभ्योऽकथयन्नृपः ॥ ३

क्षेत्राणि परिबभ्राम श्रीकण्ठादीनि चोळराट् ।
किंचित्सैन्ययुतः पत्न्या स्थाप्यराज्ये स्वकं सुतम् ॥ ४

जप्येशे कुंभघोणे च मायूरेश्वेतकानने ।
छायावने च कुद्दाले वल्मीके वेदकानने ॥ ५

कतकारण्य संज्ञेच श्रीवाञ्छ्ये कदलीवने ।
काश्यारण्ये वटारण्ये वैद्येशे कन्दुकस्थले ॥ ६

इतस्ततश्च परितः सर्वक्षेत्रेषु शंकरम् ।
नत्वातत्रात्य तीर्थेषु पत्न्यास्नात्वा स चोळराट् ॥ ७

तथापि स्वप्नमध्येतं तर्जयन्ती व्यवस्थिता ।
स्नात्वा सद्योद्भवायां च चोळो मध्यार्जुनं ययौ ॥ ८

तत्र प्राक् गोपुरस्याग्रे ब्रह्महत्या स्थिराभवत् ।
आनुन्यस्तव समस्ता सा दृश्यतेद्यापि बाह्यतः ॥ ९

राजा शिवालयं प्राप्य नत्वा तत्र महेश्वरम् ।
महालिंगाकृतिं शम्भुं विघ्नेशं चाम्बिकामपि ॥ १०

तुष्ट्वोत्थित रोमाञ्च कञ्चुकस्साश्रुलोचनः ।
स राजा हत्ययामुक्तो शाहुमुक्तइवेन्दुवत् ॥ ११

सुन्दरशोळः

मध्यार्जुनेशं नमतां वरप्रदं
देवादि देवञ्च पिनाकपाणिम् ।
विघ्नेश पूज्यामल दिव्यपादं
वन्दे महालिंगमहं महेशम् ॥ १२

विश्वेश्वरं मन्मथकालनाशं
वेदान्तवेद्यं विधि विष्णुवन्द्यम् ।
गंगोत्तमाङ्गेन्दु जटाकलापं
वन्दे महालिंगमहं महेशम ॥ १३

